# आरण्यशिक्षा

गणपतिमभिवन्द्याविद्यजालामयघ्नं
स्वरपदमितिवर्णोद्बोधनं  शीलनेन
क्षितिसुरगणहेतोरेतदारण्यशिक्षा-
मृतमिव नवशिक्षावारिधेरुद्धरामि  १

आद्युदात्तानि वाक्यानि चैकद्वित्र्यादिसंख्यया
विविधानि तु वृन्दानि विस्पष्टान्यत्र कृत्स्नशः  २

उदात्ताह्रियन्तेऽध्येतृणां सन्देहानां निवृत्तये
आदिमध्यान्तग्रहणं क्रियते यत्र तत्र तु
वाक्यानामिति मन्तव्यं श्रुतिस्त्वेकश्रुतेरिति  ३

द्व्युदात्तमध्यमित्यादि ज्ञेयमेवात्र धीमता
भवेतामाद्युदात्तौ च यत्तच्छब्दौ तु सर्वशः
योषित्प्रतिमया चेम इमे नित्यं परं न चेत्  ४

तस्याः पात्रविशेषेण स्थितं मेणिमविन्दत
यत्रैतदुपदृश्येते यो वै तां ब्रह्मणो वेद इत्यादि
वर्णान्यत्वं ---न्यत्वं पञ्चप्रश्नेषु दृष्यते
स्वारनीचत्वमुच्चस्य नीचादीनाँ तु चोच्चता

यातपुण्यपरं यत्र यथा वेत्थ परं यदि
तत्र ते च यथापुण्येत्येतन्नीचाद्यवाचि हि

उच्चं नेति पदं सर्वं रिष्यास्याधिपरं न चेत्
अथ व्यशेमापमापां महानाम्नीर्मरीच्यदः
योनिनो मा च यत्रैतत्किमेकश्रुदपाणि च

शुक्लवासा ह्लादयते चाह्नस्संवत्सरे क्षि च

आङ्केऽक्रुद्धस्य चाभ्यन्तं दुर्भिक्षं हेमतः पराङ

लोहितस्त्वं तथाभ्राणि विश्वे जायेतदेवशम्

पृच्छाम्युभयतोवातादाभोगाश्वापयः पुरम्
देवीपुत्रश्च नासत्यात्युग्रोधीरामया ततः

आमन्द्रैस्त्यमतृष्यन्मृत्वाणुभिश्चेन्द्र आप्लव
वरुणस्यानवर्णे च ह्यरिष्ठं नृमुणं रथम्
एकत्वसंख्यया वाक्यान्याद्युदात्तान्यवेक्षत

वारादं विनना यावै ह्यादित्ये हसितं प्रभुः
तं सो जिह्वोऽनुबध्नाति ह्यमून् लोकानभीतिवत्

कालैर्नैनं रेत इन्द्रं सर्वभूतसहिद्विकम्
शुक्लकृष्णोऽमुतोनैव शंनश्च मरुतः शिरः
पर्जन्याश्शिशिरश्छन्दोभीरोदस्योरपीतवि

तवेतिमन्त्रास्सर्वेषां ते एते ता अवित्रिकम्

अनूसहस्राक्षापाघ्रां भूमिं चत्वारि ब्राह्मणाः
संवत्सरीणमन्वेति त्वसतास्थाय चैकया

पञ्चकं चान्त्यविषुषट् स्मृतिर्नक्तं दसप्तकम्
अणुशः श्रेष्ठं नवकं षडुद्यमास्तथा दश

सुखदीमादिविषूक्तस्तौतावेकादशेति च
यस्मिन्नस्य सप्तदशनित्या अष्टादशेति च
देवा आदित्या ये सप्तविंशतिः कथितानि हि
यस्मिन् सूर्या इति त्रिंशत्त्रयस्त्रिंशन्निजानुकाम्
आशातिकाद्विपञ्चाशदनुवाका इतः परे

संवत्सरमथादित्यस्यादयः पञ्च चैषु तु

नैतैरूरुस्समारूढो भद्रा स्थात्र इयान वै
गार्ग्योऽमुत्रसप्तसूर्या उतचित्रं यदीत हि

दीर्घयुयो पङ्क्तिराधा एवमेतविचाकशत्
अष्टौ दिगरुणाश्चाग्निं वाश्राराजा प्रवर्ग्यवत्
द्वितीयं त्वं करोषीति विश्वरूपैः पुरोदितम्
पदं स्वरश्च बलं ह्यति च ज्योतिषान्तकम्
सोऽहं मात्रादिके द्वे द्वे यन्मे चोरस्य वैतया
यस्मिन्विमानवान्वाचोऽप्येकं च निधनेत्युभौ
अहस्तत्कर्मरात्रिस्तद् ब्रह्मवान्नाहमन्तिमम्
यद्वैतच्छिरसोच्चादितुल्यं द्व्युच्चान्तकं स्वरम्

उपान्त्यं तु गुरु स्याच्चेन्निहतं तत्र चेष्यते
लघु चेत्तदुदात्तं स्याच्छ्रुतिवाक्येषु मन्यते
एतद्ध्रविशिखे हेवा वराहव न रिष्यति
सप्तभिर्वा मिथौ येने ये चेमे यन्मयामन
अकार्यकार्युद्धृतादिर्वयमिमं म ईश्वरीम्
अमुत्रेतेति सहनावहमं नादि तु त्रयम्
निहतादि द्व्युदात्तान्तं तुल्यस्वरकमेष्वियात्
उद्धृतासि वराहेण कृष्णेन शतबाहुना
मृत्तिके हनमपापं यन्मया दुष्कृतं कृतम्
त्वं वै शीतेन सर्वस्माद् ब्रह्मन् ह्लादयते पुरम्
यो वा अदुःखो यच्छ्वेतानथाग्नेश्शिरसा तथा
तस्मै ब्रह्मेति तस्यां हि सर्वं ह परिये तथा
अलूक्षादि द्वयं चैव यदह्लादादिकं द्वयम्
अभूतिं च विजानीयाद् द्विस्वार्यं चाद्युदात्तकम्

त्वं वै शीतेन सर्वस्माद्यच्छ्वेतान् ह्लादयतेति च

यो वै च परियेऽलूक्षा यथा ते शिरसा तथा
यदह्वाद्येतदुक्तेषु द्विस्वार्यैकोच्चमध्यता

अथाग्नेस्सर्वं तस्यां हि तस्मै ब्रह्म पुरं त्वदुः
द्व्युदात्तमध्यं द्विस्वार्यं ब्रह्मन्न भूतिमेव च

सर्वस्मात्तस्मात्त्रिस्वार्यमुच्चाद्येकोच्चमध्यकम्
पटरो निजहन्विष्णुकश्यपात्पशवोऽग्नयः
उभयानश्टतासेह चोद्धृतेत्यादि पञ्चकम्
शरीरे चोत्तमेत्यादि द्वयं च यन्मयामन
ईश्वरीमूर्ध्वरेतं च सरमा अमुमश्विना
नीलद्विस्वार्यनीचादिवाक्यजालमुदाहृतम्
प्रतिष्ठिते विनान्यत्तत्सर्वमेकोच्चमध्यकम्
यदिप्रसेन्द्रथेनुर्द्वौ यथाशक्तीत्यसञ्चय
श्रीर्मेविद्याप्रजापश्चेत्येते सध्विपदोत्तरे
यः पूर्वस्य च योगश्च श्रियाह्रियान्निया रसः
ओन्तदादिषडासीतमहान् स्यात्स्वरितादिकम्

स्वाध्यायो देवगायत्रीं छन्दसां च कषोदभीत्
निहतानन्तरस्वारपदान्युक्तान्यमूनि तु

अत्र द्विजस्वरेकारान्नीचेकारे परे सति
ईकारः क्रियते सन्धौ प्रश्लिष्टः स्वरितः क्वचित्

हीन्द्रक्वचिदभीद्धोक्तं प्रश्लिष्टस्वरितद्वयम्
अनृणाचित्रं यस्तित्या नमो ब्रह्मेति या ऋचः
स्वाध्यायब्राह्मणे सान्तास्तासामिति परं न चेत्

ग्रामे मध्यन्दिने चैव तस्य द्वौ कतिधा भवेत्
एकद्विपञ्चकं चैकं नमो वाचेति तद्द्वयम्
होमे पूर्वे सहप्रश्ने पितृमेधाम्भसोर्ननि

प्राकृतस्वरमध्यस्थो डकारो ळत्वमाप्नुयात्

वितुदस्येति दत्वं स्यात्प्रेत्येकार एव तु
भद्रं च सह संज्ञानं लोकस्तुभ्यमिति क्रमात्
एते काठकसंज्ञास्स्युः पञ्चप्रश्ना न चेतरे
तेनशब्दात्परः पृक्तः पूर्वं नाप्नोतिकाठके
ऊष्मणापृक्तसंयोगे विषेधस्तत्र नेष्यते
ऋकारश्च लकारश्च पृक्त इत्यभिधीयते
तेनशब्दात्परो रेफं नैति द्वित्वं च तत् परम्
धिष्णियाद्रात्र्या मन्त्र्यपित्र्यभत्र्यो जनयित्र्योऽपि च
काठकस्थपदेष्वेषु नेकारस्याद्य एव हि

वासः शब्दादनुस्वारः काठके नीच इष्यते
काठकेषु शनावेव स्वोऽन्यत्र च शञौ सुवः
कम्पौ तु द्विविधावेव स्वारोच्चाविति निश्चितौ
संहितायां तयोः स्वार उच्चस्त्वारण्यके मतः
नित्योऽभिनिहतः स्वारो यददीव्यादिषु त्रिषु
नकञ्चने चोच्चपर उच्चः कम्पो विधीयते

पदान्ते च तथा कम्पा अन्ततो निहताणुकाः
शेषस्योदात्तता वा स्यात्स्वरितो वा व्यवस्थया

आरण्यके तु न स्वारो नोदात्तश्चैव संहिते
पारक्षुद्रे न कम्पस्स्याद्द्विधाकम्पो न तु त्रिधा

इन्द्रघोषादयस्सप्तविशीर्ष्णोत्यादयस्त्रयः
अष्टयोनीं तथा योऽसावेषु तुल्यस्वरं विदुः

तुल्यं स्वरं तु जानीयाद्यत्रै वैकोच्चकं पदम्
एतद्वस्ताननुपरि संज्ञानं वो विहायसे
पुष्करपर्णैर्महानाम्नीरिन्द्रश्चैतद्विवर्जयेत्

नादित्येन तथाप्नोति व्यपोह्यसह चन्द्रम
उभे बहूतपरमे शरीरे पाप्मनो महान्
अमृतस्याथजिह्वामे प्रतिवेशोऽप्सु लोमशाम्
अद्भ्यो वायोरहं नित्यं मनुष्या ब्रह्मविद्यदा
भीषाकीर्तिर्निरुक्तादि द्विःश्रुतादित्रयं क्रमात्
पाने ह्येव परोन्नश्रुद्विज्ञानश्रुत्तथैव च
नोपासते परः प्राण आनन्दोऽग्निरिदं त्वृतम्
सत्यैवमेतदेतेषु नोच्चान्तेष्वादिनीचता
सर्वत्राकाशशब्दःस्यादात्मासन्धिपरो न चेत्
तथैव पृथिवीशब्दः पूर्वपुच्छपरो न चेत्
आदिशन्नस्त्वन्त्वमिति वदिष्यामीति पठ्यते
द्वितीयशं नस्त्वं त्वामित्यवादिषमितीर्यते

अहमस्म्यादि चत्वारि कश्चित्समिति चैककम्
एषु प्लुतोत्तराश्चान्त्यवर्णास्सर्वेऽपि नीचकाः

न कंचन यतोवाचस्स्वारान्तोपनिषद्भवेत्
सर्वे नारायणप्रश्न उच्चान्त इति निर्णयः

विश्वा अग्निश्च सावित्रमसन्नेव द्वयं द्वयम्
देवा एकं नकं सप्त षोडशारण्यके प्लुताः

प्लुतस्सर्व उदात्तस्स्यात्स्विदासीदन्तिमं विना
प्रश्नेऽम्भसीति बहुशो विसंवादस्फुटायवै
एकश्रुत्यादिवाक्यानि कण्ठोक्तानीति सर्वशः

उदात्तादि स्वरा यत्र चातुःस्वर्याविवेकतः
प्रोच्यते चोच्चवद्वाक्यमेकश्रुतिनिगद्यते

आदिमैकपदेद्व्युच्चं बहूच्चं यत्र कुत्रचित्
एकोऽनुदात्तस्स्वरितमन्तोच्चं तच्छ्रुतीर्यते

एकस्मादवसाने च द्वाभ्यां वा श्रुतिवाक्यगौ
चतुर्थं पञ्चमादर्वागपदान्तौ यमाविति

पूर्ववच्च त्रयोद्व्युच्चास्तत्षष्ठः पूर्ववद्भवेत्
उपान्त्यन्तु गुरु स्याच्चेन्निहतं तत्र चेष्यते
लघु चेत्तदुदात्तं स्याच्छ्रुतिवाक्येषु मन्यते

आदौ मध्ये तथा चान्ते क्वचित्सर्वत्र तद्भवेत्
भूमिर्धेनुरलक्ष्मीश्च कामो मन्युस्तथैव सः
श्रीश्चादित्रीणि यज्ञश्रुत्त्वेतान्यभ्यवेक्षत

कामो मन्युश्च वाक्यान्त्ये विना मध्यगते उभे
अथान्त्येन विने शानोऽप्यन्तश्चरति वा तिलाः
स्तुतादि द्वे च गोस्तेयमुच्यन्ते द्विश्रुतीनि हि
अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु
एतत्सोमस्य चौजोऽसि नमः प्राच्यै बहुश्रुतिः
यो वेदादावन्नमयप्राणापानादि च द्विषट्
सचामिति तथा चादावेकश्रुतिनि गद्यते
वृतैतस्मिन्नमो वारु सर्वात्वं हि तथैव च
द्वितीयमेते आत्मानं पठ्यत्यन्त्यश्रुतीनि हि

ऊर्ध्वाद्यं परमत्यन्तमग्निश्चादित्रयं तिलान्
प्राणानां ग्रन्थिर्द्वे चादि पाह्यङ्गुष्ठनमोहिर

सर्वाणि श्रुतिवाक्यानि विनामय्यन्तमेष तु
गायत्रीकुक्षिपर्यन्तं याम्यन्तं पञ्चकं स्मृतम्
पञ्चादियोगपर्यन्तं सप्तचान्त्यश्रुतीनि हि
ओजोऽसीतिमहावाक्यस्यान्त्यश्रुतिनिगद्यते
ब्रह्माविष्णुश्च रुद्रश्च पदत्रयमनुक्रमात्
नमो गङ्गादितेमादिसन्तियन्ति नमोऽन्तकम्

विज्ञेयानि तथैतानि चत्वार्यन्त्यश्रुतीनि हि
सर्वायुरेकमेतस्मिन्नीचाद्येकश्रुतीर्यते
ओम्भुवो मुखवाक्यानि पञ्च सर्वोच्चकानि वै
अहमस्म्यादि तु त्रीणि चादेराद्यक्षरं विना
इति मन्त्राश्च यत्रैतदपेतश्च तथैतिवत्

अयमात्मा यथा कूपो दक्षिणायै परं नमः
एतत्सर्वं द्व्युदात्तादि महसः परमोमिति
वापोद्धमाकूजसिद्धमणिमैक ऋृषिस्तथा
अमुष्येति द्व्युदात्तानि पदान्युक्तानि वैदिकैः
समानसी सदाम्नी चावान्तरायै तथालकम्
प्रक्षोषिकं तु द्विषतस्सवितारेपसस्तथा

पद्मकोशज्वालमालातिर्यगूर्ध्वौ ह्यमोद्गनात्
सतःशब्दस्तु सर्वत्र महसो महसः परम्
धान्यमेतानि चान्तोच्चान्यवेदिषतवैदिकैः
प्रमँहेति द्युदात्तादिद्व्युच्चमध्यमभीषुणः
सरुश्चाद्युदात्तःस्याच्छुक्छुचं तौ तु सर्वतः
अस्मादस्मादिदं वाक्यमुपान्त्येतु द्व्युदात्तकम्
उपादि तु द्व्युदात्तं स्यादिहेहववराहव

अवसान उदात्तस्य सन्धौ नीचत्वमिष्यते
सहवै पितृमेधाम्भस्युदात्तस्याथसन्धिषु
नीचत्वं तत्परेषां च द्वयोरेकस्य वाक्वचित्
अश्वान्त्सत्वं यथा चैव मीशानश्चैव पुण्यकृत्
यन्मे मनान्तश्चाया तु नमः प्राच्यै तथैव च
एकैकवाक्यमेतेषु सन्धिनीचं निगद्यते
यन्मयामनसर्तं स सहस्रपरमां तथा
एतत्सोमस्य वै प्रोक्तं सोग्रभुङ्नीलतोयद
गन्धद्वारामत्याशनादधाश्च क्रान्त इत्यपि

सन्धिनीचत्वमेष्टव्यं वाक्ययोरुभयोः क्रमात्

यन्मया मनसा वाचा कृतमे नः कदा चन
ऋृतं सत्यं परं ब्रह्म पुरुषं कृपिङ्गलम्

सहस्रपरमादेवी शतमूलाशताङ्कुराः
एतत्सोमस्य सूर्यस्य सोग्रभुग्विभजन्तिष्ठन्

नीलतो यदमध्यस्था गन्धद्वारां दुराधर्षाम्
अत्याशनादतीपानादश्वक्रान्ते रथक्रान्ते

क्षुत्पिपासां च पद्मादौ पूर्वोक्तं क्रमशस्त्रिषु
क्षुत्पिपासामलं ज्येष्ठामित्यादि वाक्यत्रयम्
पद्मकोशप्रतीकाशमित्यादि वाक्यत्रयम्
उत्तमे शिखरे चैव तिलाःकृष्णास्तथैव च
यदह्नात्कुरुते पापं चतुर्णां क्रमशो भवेत्

यो वेदादौ स्वरः प्रोक्तः पञ्चानां क्रमशो भवेत्
नारायणं महाज्ञेयमुद्धृतास्यादिषट् तथा
प्राणापानव्यानोदानद्वादशानामनुक्रमात्
दूर्वाशतयमो विष्णुः तस्मात्त्वयि च काश्यपे
पाणिना यच्च नित्यैषा पुरुषं तद्ययोक्षरम्
सन्ध्याभूम्यां विश्ववेद गच्छदेवि तथैव च
सहस्रशीर्षमित्यस्मिन्नाहारमिति वर्जयेत्
एतत्सन्धिनिघातस्य वर्णस्य परमक्षरम्
निहतं तद्विजानीयादेकैकस्वरवित्तमः
कृतमेनो रक्षकृष्णे ब्रह्महा यन्म कर्म च
गच्छमीति तथालक्ष्मीः पूर्वोक्तं निहतद्वयम्

यन्मया मनसा वाचा कृतमेनः कदा चन
यत्रैव सन्धिनीचत्वं तत्रैवेत्यवसानता

पापं भूत्वा यन्तिदेवी याम्याद्यवसितस्थलम्
आरगयादौ द्वयोश्चान्ते त्रिषु चैवं विधीयते
वर्णान्यत्वं स्वरान्यत्वं पञ्चप्रश्नेषु सूरिभिः
स्वारनीचत्वमुच्चस्य नीचादीनां तु चोच्चता
वैतां देवी च भूयिष्ठा वेदाश्चेति क्षिता इति
इत्यादिषु स्वरान्यत्वं वर्णान्यत्वं च हेळनम्
शिक्षादित्रितयं त्वेकोऽध्याये भवितुमर्हति
आद्यौ द्वौ पितृमेधाम्भः पञ्चाध्याया भवन्त्यमी

श्लोकाँ सुमङ्गलाँ यद्घ्राँ उपहूताँ ममाँ प्लुताः
दीर्घास्ताँ इमिदेवाँ उ स्वाँ अहं ममृवाँ अव
पञ्चरङ्गप्लुतादीर्घाश्चत्वारस्तैत्तिरीयके
तेषामन्तेषु नासिक्यं रङ्गसंज्ञनितीर्यते
रङ्गे स्वरे च मात्रैका प्रत्येकं रङ्गदीर्घयोः
रङ्गे स्वरे च द्वे मात्रे तथावत्प्लुतरङ्गयोः

रङ्गप्लुतश्चतुर्मात्र इत्युक्तो याजुषां मते
ऊष्मरेफस्वरेभ्यः प्रागनुस्वारः प्रवर्तते
परमात्मं सरूपं प्राङ्मकारस्यानुनासिकः

ओमित्यत्र मकारो यः परे शान्तौ म एव हि
अस्मेद्वितयसंयुक्तमकारो याति वाक्यताम्
शान्तित्रितयसंयुक्तः प्रणवो याति वाक्यताम्

यायकाराडविधायोर्ध्वमृषिभ्यो ह्यृषयो ह्यृषिः
इत्यास्त्रशीमकापूर्वमृषं चेति स्वतन्त्रता

आद्युदात्तस्तपोगर्भ स्वस्वानीति परं न चेत्
आदित्यो वानुवाकश्च सत्यादित्र्यनुवाकाकाः
द्विजस्वरद्वयान्तोपनिषच्छब्दावसानकाः

द्वितीयादि चतुष्काणां नवकं चादिनीचकम्
यो सावित्यनुवाकेऽस्मिन् शेषमुच्चादिकं भवेत्
न कंचनानुवाकेऽस्मिन् वाक्यानामाद्युदात्तता
अहमित्यनुदात्तादि स्वरितादि महानिति

दीप्तिशून्याः स्वनाम्नाक्षैप्रादयस्त्वादिमध्ययोः
स्वाराः सप्त स्वरितानित्या प्राकृतश्चाक्षयो ध्रुवः

अक्षरश्चाव्ययो नाम तेषामुच्चपरेऽपि वा
क्षैप्रस्स्वार इवर्णस्य गायत्री श्रीःश्रियाह्रिया
केवलं यवयोस्स्वारश्चाग्नयः पशवो यथा
तत्र नित्यस्य विद्या यदि प्रजाद्यौ महान् रसः

एकारौकारयोस्तत्र स्वारोऽभिनिहतो भवेत्
सेन्द्रयोनिरदुःखस्तु तत्राभिनिहतः कषोत्
सांहिते स्वरितेऽप्युच्चपरः प्रातिहतो भवेत्
अमुमाहुरूर्ध्वरेतं यथा ते त्विहतेति च
ऊकारस्स्वरितस्तत्र प्रश्लिष्टोऽभूतिमित्यपि
केवलं यस्स्वरस्स्वारः पादवृत्तस्त्वसञ्चयः
तस्यां हि पूर्वमुच्चस्तु तैरोव्यञ्जनकः पुरः

लक्षणेन विना विद्या निर्मलापि न शोभते
अप्राणस्येव देहस्य भूषणैरप्यलङ्कृतिः

इत्थं न्यरूपि सकलं स्वरवर्णजालं
स्वाध्यायपञ्चसुमुदे निगमेतराणाम्
आरण्यके यदिह किंचन न न्यरूपि
तद्बुद्धिमद्भिरखिलं स्वयमूहनीयम्
चित्यादि प्रश्नत्रितये संहितावत्स्वरो भवेत्
एकश्रुत्यादिकं वाक्यं विना सत्यसमस्वरम्

प्राप्नोत्येवोमिति परे ह्यवर्णान्तस्य दाशिवोम्
सुब्रह्मगयों परं रूपं सवोमित्यादि सर्वतः

आरगयके तु वाक्यान्त उदात्तो नम उच्यते
नोपते वै महोजाय सेभ्यःपूर्वो विगास्तथा
सद्यश्च वामदेवाय ऋतँ ससत्यमेव च
भूःप्रपद्ये च सर्वो वै नमश्च स्वरितो भवेत्
नकंचन यतो वाचस्वारान्तोपनिषद्भवेत्
सर्वेनारायणप्रश्न उच्चान्ता इति निर्णयः

श्रीरस्तु